चतुष्पदातु—"पश्वानतायुम्०" (अष्ट० १ अ० ५ वर्ग ६)। एकार्द्धर्चा त्रिपदा, एकार्द्धर्चा द्विपदा, एका ऋक् पञ्चपदा अध्ययने। 'द्विद्विपदास्तृचः समामनन्ति' इत्यत्र समपादग्रहणात्। असमानपदा विरुद्धा, तर्हि पङ्क्तिच्छन्दो पञ्चपदा भवति। तस्य द्वितीयभेदो विराट् तस्मात्पञ्चपादत्वं प्राप्तम्। समपादा वा असमपादो विराट्छन्द इत्यर्थः। अत्र श्रुतिः—"समौ चिद्धस्तो न समं विविष्टः सम्मातरा चिन्नासमं दुहाते" (अष्ट० ८ अ० ६ वर्ग २३) इत्यनया ऋचा परिहारः। दक्षिणवामहस्तौ कर्तृत्वे असमावित्यर्थः। अथाध्ययने ऋक्सङ्ख्योच्यते षण्णवत्यधिकचतुःदशसहस्राणीति (१०४६६)। ताः सहितनैमित्तिकद्विपदाश्चत्वारिंशोत्तरशतसहितदशसहस्राणीति 'सञ्ज्ञानमुशनावदत्' सूक्तस्य पञ्चदशर्चैकीकृत्य एवं पारायणे ऋक्सङ्ख्या। 'ऋचां दशसहस्राणि' इति वचनस्य सङ्ख्या पूर्णा भवतीत्यर्थः। एका उर्वरिता सा "भद्रन्नो अपि वातयमनः" (अष्ट० ७ अ० ७ वर्ग २) इति पादाधिक्यमनुक्रमणिकावृत्तावप्युक्तेः। 'भद्रं पुच्छम्' (ऐत० आ० ५.८) इत्यारण्यके।

अथ सञ्ज्ञानसूक्तम्—

सञ्ज्ञानमुशनाऽवदत्सञ्ज्ञानं वरुणोऽवदत्।
सञ्ज्ञानमिन्द्रश्चाग्निश्च सञ्ज्ञानं सविताऽवदत् ॥१॥

सञ्ज्ञानं नश्वेभ्यः सञ्ज्ञानमरणेभ्यः।
सञ्ज्ञानमश्विना युवमिहास्मासु नियच्छताम् ॥२॥

यत्कक्षीवांसं वननं पुत्रो अङ्गिरसा भवेत्।
तेन नोऽद्य विश्वदेवाः सम्प्रियां समजीजनन् ॥३॥

सं वो मनांसि जानताम् समाकूतिर्मनामसि।
असौ यो विमना मनः संसमावर्तयामसि ॥४॥

नैंहस्त्यं सेनादरणं परिवर्त्मे तु यद्धविः।
तेनाऽमित्राणां बाहून्हविषा शोषयामसि ॥५॥

परिवर्त्मान्येषामिन्द्रः पूषा च सस्रतुः।
तेषां वोऽग्निदग्धानामग्निमूढानामिन्द्रो हन्तु वरं वरम् ॥६॥

ऐषु नह्यवृषाजिनं हरिणस्य धियं यथा।
पराँऽमित्राँऽऐष त्वर्वाची गौरुपाजतु ॥७॥

प्राध्वराणां पते वसो होतर्वरेण्य क्रतो।
तुभ्यं गायत्रमृच्यते ॥८॥

गोकामोऽन्नकामः प्रजाकाम उत कश्यपः ॥९॥

भूतं भविष्यत्प्रस्तौति सहब्रह्मैकमक्षरं वहु ब्रह्मैकमक्षरम् ॥१०॥

यदक्षरं भूतं कृतं विश्वेदेवा उपासते।
महर्षिमस्य गोप्तारं जमदग्निरकुर्वतम् ॥११॥

जमदग्निराप्यायते छन्दोभिश्चतुरुत्तरैः।
राजा सोमस्य भक्षेण ब्रह्मणा वीर्यावताम् ॥१२॥
शिवा नः प्रदिशो दिशः सत्या नः प्रदिशो दिशः।
अजो यत्तेजो ददृशे शुक्रं ज्योतिः परो गुहा ॥१३॥
यदृषिः कश्यपः स्तौति सत्यं ब्रह्म चराचरं ध्रुवं ब्रह्मचराचरम्।
त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषम् ॥१४॥
यद्देवानां त्र्यायुषं तन्मेऽस्तु त्र्यायुषं सर्वमस्तु शतायुषं
बलायुषम् ॥१५॥

(तच्छंयोरावृणी महे गातुं यज्ञाय गातु यज्ञपतये।
दैवी स्वस्तिरस्तुनः स्वस्तिर्मानुषेभ्यः।
ऊर्ध्वं जिगातु भेषजं शन्नो अस्तु द्विपदे शं चतुष्पदे ॥)
(अष्ट० ८ अ० ८ परिशिष्ट)

इति सञ्ज्ञानसूक्तं पञ्चदशर्चात्मकम्। अस्य ग्रहणे प्रमाणमाश्वलायनसूत्रम्। तच्च "समानीव" इत्येका "तच्छंय्योरावृणीमह" इत्येकेति। तथा च शाङ्खायनस्य कौषीतकिसूत्रम् – "अथोपाकरणमोषधीनां प्रादुर्भावे हस्तेन श्रवणेन वाऽक्षतसक्तूनां धानानां च दधिघृतमिश्राणां प्रत्यृचं वेदेन जुहुयादिति हैक आहुः सूक्तानुवाकाद्याभिरिति वाऽध्यार्षेयाद्याभिरिति माण्डूकेयोऽथ ह स्माह कौषीतकिरग्निमीडे पुरोहितमित्येका कुषुम्भकस्तदब्रवीदावदंस्त्वं शकुने भद्रमावद गृणाना जमदग्निना धामन्ते विश्वं भुवनमधिश्रितं गन्ता नो यज्ञं यज्ञियाः

सुशमि यो न स्वोऽअरणः प्रतिचक्ष्वविचक्ष्वाग्ने याहि मरुत्सखा यत्ते राजं घृतं हविरिति द्वयृचा तच्छंय्योरावृणीमह इत्येका हुतशेषाद्धविः प्राश्नन्ति'' (कौ० गृ० सू० ४.५) इति। पञ्च शाखानां पारायणे 'तच्छंय्योरावृणीमह' इत्यत्र समाप्तिरेकवेदत्वात्। उक्तं च—

ऋचां समूह ऋग्वेदस्तमभ्यस्य प्रयत्नतः।
पठितः शाकलेनादौ चतुर्भिस्तदनन्तरम्॥
साङ्ख्याश्वालायनौ चैव माण्डूका वाष्कला तथा।
बह्वृचा ऋषयः सर्वे पञ्चैते ह्येकवेदिनः॥

इति।

साङ्ख्यानाम शाङ्खायन इति।

अथ पारायणे वर्गसङ्ख्योच्यते— 'एकर्च एकवर्गश्च एकर्चनवकस्तथा'। एकर्च एकवर्गो 'जातवेदसे' (अष्ट० १ अ० ७ वर्ग ७) इत्यर्थः। नवर्च एकवर्गः 'आपो हि ष्ठा' (अष्ट० ७ अ० ५ वर्ग ५) इति। द्वौ वर्गौ तु द्वृचौ ज्ञेयौ द्वौ वर्गौ द्वृचावित्यर्थः। 'अग्ने त्वन्नोऽअन्तमः' (अष्ट० ४ अ० १ वर्ग १६), 'आयाहि वनसा सह' (अष्ट० ८ अ० ८ वर्ग ३०) इति। ऋक्त्रयस्य शतं स्मृतम्। तृचो वर्गाः शतमित्यर्थः। 'उत त्यं चमसं नवम्' (अष्ट० १ अ० २ वर्ग २) इत्यादि।

चतुर्ऋचां पञ्चसप्तत्यधिकं च शतं तथा॥

चतुर्ऋचवर्गाः पञ्चसप्तत्यधिकशतमित्यर्थः। 'यदङ्ग दाशुषे त्वम्' (अष्ट० १ अ० १ वर्ग २) इत्यादि।

पञ्चर्चं तु द्विशतकं सहस्रं रुद्रसंयुतम्॥

पञ्चर्चवर्गा एकादशाधिकद्वादशशतानीत्यर्थः (१२११)। 'अग्निमीडे' इत्यादि।

पञ्चचत्वार्यधिकं तु षड्ऋचां तु शतत्रयम्॥

षड्ऋचवर्गाः पञ्चचत्वारिंशदधिकशतत्रय इत्यर्थः (३४५)। 'अश्विना यज्वरीरिष' (अष्ट० १ अ० १ वर्ग ५) इत्यादि।

सप्त ऋचां शतं ज्ञेयं विंशतिश्चाधिकाः स्मृताः।

सप्तर्चवर्गा विंशत्यधिकशत इत्यर्थः। 'यच्चिद्धि सत्यसोमपा' (अष्ट० १ अ० २ वर्ग २७) इत्यादि।

अष्टऋचां तु पञ्चाशतपञ्चाधिकास्तथैव च ॥

अष्टर्चवर्गाः पञ्चाधिकपञ्चशत इत्यर्थः (५०५)। 'इन्द्रं विश्वाऽअवीवृधन्' (अष्ट० १ अ० १ वर्ग २१) इत्यादि। एवं दशाधिक सहस्रद्वयवर्गा इत्यर्थः (२०१०)। पञ्चशाखासु निश्चिताः। पञ्चशाखानां पारायणे निश्चयेन इत्यर्थः।

वर्गाः सञ्ज्ञानसूक्तस्य चत्वारश्चात्र मीलिताः ॥

सञ्ज्ञानसूक्तस्य चत्वारो वर्गाश्चात्र मिलित्वा दशाधिकसहस्रद्वयमित्यर्थ।

एवं पारायणे प्रोक्ता ऋचां सङ्ख्येन न्यूनतः ॥

एवं पूर्वोक्तप्रकारेण वर्गस्य ऋक्न्यूनसङ्ख्येन दशर्चस्य पञ्चऋक् त्रीण्यर्द्धर्चस्य ऋक्कर्तव्येत्यर्थः। एवं चतुर्विधपारायणेऽपि ज्ञेयम्। 'समानीव' (अष्ट० ८ अ० ८ वर्ग ४९) इति शाकलानां 'तच्छँय्योरिति' वाष्कलानामित्यत्र वाष्कल-शाखाध्ययनमनुक्रमणिकावृत्तावुक्तम्।

**तच्च**—

गौतमादौशिजः कुत्सः पारुच्छेपाद्दषेः परः।

कुत्साद्दीर्घतमेत्येव वाष्कलाध्ययने क्रमः ॥

अस्यार्थः गौतमादौशिजः कुत्सः। 'उप प्रयन्तो' (अष्ट० १ अ०५ वर्ग २१), 'नासत्याभ्याम्' (अष्ट० १ अ० ८ वर्ग ८), 'अग्नि होतारम्' (अष्ट० २ अ० १ वर्ग १२), 'इमं स्तोमम्' (अष्ट० २ अ० ७ वर्ग ६), 'वेदिषदे' (अष्ट० २ अ०२ वर्ग ५), एष वाष्कलक्रम इत्यर्थः। अत्रैवमुक्ते उत्तममण्डले नवके अनुक्रम-विपर्यासः। तच्च—'स्वादोरभक्षि' (अष्ट० ६ अ० ४ वर्ग ११) सूक्तान्ते 'अभिप्रवः सुराधसम्' (अष्ट० ६ अ० ४ वर्ग १४), 'प्र सुश्रुतम्' (अष्ट० ६ अ० ४ वर्ग १६) इति सूक्तद्वयं पठित्वा, 'अग्नऽआयाहि अग्निभिः' (अष्ट० ६ अ० ४ वर्ग ३२) इति पठेत्। ततः 'आप्र द्रव' (अष्ट० ६ अ० ६ वर्ग १) अध्याये 'गौर्धयति' (अष्ट० ६ अ० ६ वर्ग २८) अनुवाको दशसूक्तात्मकः शाकलस्य। पञ्चदशसूक्तात्मको वाष्कलस्य। तत्रोच्यते—'गौर्धयति' सूक्तानन्तरं 'यथा मनौ सांवरणौ' (अष्ट० ६ अ० ४ वर्ग १८), 'यथा मनौ विवस्वति' (अष्ट० ६ अ० ४ वर्ग २०), 'उपमन्त्वा' (अष्ट० ६

अ० ४ वर्ग २२), 'एतत्त्ऽइन्द्र' (अष्ट० ६ अ० ४ वर्ग २४), 'भूरिदिन्द्रस्य' (अष्ट० ६ अ० ४ वर्ग २६) इत्यन्तानि पञ्चसूक्तानि पठित्वा आ त्वा गिरो रथीरिव (अष्ट० ६ अ० ६ वर्ग ३०) इति पठेयुः। अन्ते—'संसमित्' (अष्ट० ८ अ० ८ वर्ग ४६) सूक्तानन्तरं पञ्चदशऋचात्मकं 'सञ्ज्ञानमुशनावदत्' इत्यादि 'तच्छँय्योरावृणीमह' इत्यन्तं वेदसमाप्तिरिति वाष्कलशाखाध्ययनम्। एवमध्ययनाभावाच्छाखाऽभावइत्यर्थः। सूक्तसहस्रसप्तदशाधिकात् अष्टौ सूक्तानि वाष्कलस्याधिकानीत्यर्थः। 'प्रति ते (अष्ट० ६ अ० ४ वर्ग २७), 'युवं देवा' (अष्ट० ६ अ० ४ वर्ग २८), 'यमृत्विजो' (अष्ट० ६ अ० ४ वर्ग २९), 'इमानि वाम्' (अष्ट० ६ अ० ४ वर्ग ३०) इति चत्वारि वालखिल्यसूक्तानां लोप इत्यर्थः।

यस्तानृग्वेदवैवाप्यधीते स नाकपृष्ठं भजते ह शश्वत् ॥

अस्यार्थः यः तान् ऋगर्थवित् वेदविदितः हवने पारायणे च अधीते सः वेदिताऽध्येता च नाकपृष्ठं शश्वत् सदा भजते। ह प्रसिद्धौ। इतोऽमुं लोकमेत्युत तस्मान्न प्रच्यवते हीत्यर्थः।

अथ पारायणफलं तदुक्तमारण्यके—"यद्धि सन्धिं विवर्तयति तं निर्भुजस्य रूपमथ यच्छुद्धे अक्षरे अभिव्याहरति तत्प्रतृणस्य रूपमग्रऽउऽएवो भयमन्तरेणो-भयव्याप्तं भवत्यन्नाद्यकामो निर्भुजं ब्रूयात्स्वर्गकामः प्रतृण्णमुभयकाम उभय-मन्तरेणेति"।

अस्यार्थः द्वयोः पदयोरक्षरयोर्वाऽपि सन्धिस्तस्य अविच्छेदाध्ययनं तन्निर्भुजं संहितापारायणमुच्यते। शुद्धे द्वे पदे अक्षरे वा सन्धिमकुर्वतोच्चारणं तत्प्रतृण्णं तत्पदपारायणम्। संहितापदाभ्यामुभाभ्यां व्याप्तमुभयमन्तरेण क्रमपारायण मित्यर्थः। तथा च सति त्रिभिः कृत्वा स्वरास्वरं विजानाति मात्रामात्रां विभजन्ते सा संहितेति। एवमेतां संहितां यो वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेतीति। तस्मात्क्रमादृते द्वे पदे संहिता द्वै पदस्वरश्च न सिध्यति। द्वै पदसिद्धे उत्तरारम्भः कर्त्तुं न शक्यते। अतश्च पादार्द्धर्चऋक् सूक्तसिद्ध्यर्थं भगवता पाञ्चालेन स्थापितानां पारायणकर्मणां क्रमपारायणमुत्तमं भवतीति च। अत्र श्लोकः—

प्रागाथेन पुरा दानं दृष्ट्वा क्रुद्धो महामुनिः ।
अर्थवन्तं क्रमं ब्रूयाद्देवतायाश्च शास्त्रतः ।।

अतो ऋग्यजुषां बृंहणं पदैः स्वरैश्चाध्ययनं तथा त्रिभिः ।

अतोऽपि अस्मादपि हेतोः क्रमः अर्थवान्भवति । क्रमेण कृत्वा ऋग्वेदपारायणे ऋचां बृंहणं साधारणं भवति । इदमित्थमेव पाठ इति स्वरमात्रादिरूपेण निश्चयो भवति । तथा यजुर्वेदपारायणे यजुषां बृंहणं नाम साधारणं स्वरमात्रादिरूपेण इदमित्थमेव पाठ इति निश्चयो भवति इत्यतिदेशः । इत्यलं प्रपञ्चेन ।

अथ पारायणविधिः । अत्रादौ कलशस्थापनाद्युक्तं महार्णवे—

तीर्थे देवालये गेहे प्रशस्ते सुपरिष्कृते ।
कलशं सुदृढं तत्र सुनिर्णिक्तं सुभूषितम् ।।१।।

पुष्पपल्लवमालाभिश्चन्दनैः कुङ्कुमादिभिः ।
मृत्तिकायवसम्मिश्रं वेदमध्ये न्यसेत्ततः ।।२।।

पञ्चाशद्भिःकुशैःकार्यो ब्रह्मा पश्चान्मुखस्थितः ।
स्नापितः स्थापितः कुम्भे चतुर्बाहुश्चतुर्मुखः ।।३।।

वत्सजान्वाकृतिं वेदमुत्तराग्रैः कुशैः कृतम् ।
ब्रह्मोपधाने दत्वा तं ततः स्वस्त्ययनं पठेत् ।।४।।

प्रतिष्ठां कारयेत्पश्चात्पूजाद्रव्यमथोच्यते ।
यज्ञोपवीतं नैवेद्यं वस्त्रचन्दनकुङ्कुमैः ।।५।।

स्रग्धूपदीपताम्बूलैरेतैश्चापि पितामहम् ।
ब्रह्मयज्ञानमिति वा गायत्र्या वा प्रपूजयेत् ।।६।।

उपाध्यायं च सम्पूज्य यथापाठं पठेत्ततः ।।

ततो होमादि वक्ष्यमाणं कृत्वा पठेदित्यर्थः । तत्रैव बौधायनः—

"स्थण्डिलं कल्पयित्वाग्निमुपसमाधाय तं परिस्तीर्याज्येनैताभ्यो देवताभ्यो जुहोत्यग्नये सोमाय विश्वेभ्यो देवेभ्यो ब्रह्मणे ऋषिभ्यो ऋग्भ्यो यजुर्भ्यः

सामभ्यः श्रद्धायै मेधायै प्रज्ञायै धारणायै श्रियै ह्रियै सावित्र्यै सवित्रे प्रजापतये काण्डऽऋषयेऽग्नये काण्डऽऋषये विश्वेभ्यो देवेभ्यः काण्डऽऋषिभ्यः संहिताभ्यो देवताभ्यऽउपनिषद्भ्यो याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यो वारुणी देवताभ्य उपनिषद्भ्यो हव्यवाहाय विश्वेभ्यो देवेभ्यो वरुणेभ्योऽनुमत्यै स्विष्टकृते च पृथक् स्वाहाकारेण हुत्वा व्याहृबिभिश्च हुत्वा पुनः परिषिञ्चति समाप्ते चैता यजुषा तर्पयति"।

अन्ते एता "अग्निसोमाद्या" यजुषा पदेन सह तर्पयेत्। यद्वा "भूर्देवांस्त-र्पयामि" इत्यादि यजुषा तर्पयित्वाऽन्यादींस्तर्पयेदित्यर्थः।

महार्णवे—

"एवमृग्वेदस्य काण्डऽऋष्यादिवर्जमास्विष्टकृतस्तेषां स्थाने शतर्चिभ्यो माध्यमेभ्यो गृत्समदाय विश्वामित्राय वामदेवायाऽत्रये भरद्वाजाय जमदग्नये गोतमाय वसिष्ठाय प्रागाथेभ्यः पावमानीभ्यः क्षुद्रसूक्तेभ्यो महानाम्नीभ्य इति।" "ततो वेदादिमारभ्य सन्ततमधीयीत" इत्याह भगवान्बोधायनः।

पुनर्महार्णवे—

"अथातः पारायणविधिं व्याख्यास्याम आसमाप्तेर्नाश्नीयाद्यथाशक्तिं वाऽऽपः पयः फलान्योदनं वा हविष्यमात्रमन्नमल्पं भुक्त्वा तदाऽशेषमधीयीत ग्रामात्प्राच्यामुदीच्यां वा दिश्युपनिष्क्रम्याग्निमुपसमाधाय परिस्तीर्येध्मं प्रज्वाल्याज्येनैताभ्यो देवताभ्यो जुहोत्यग्नये सोमायेन्द्राय प्रजापतये बृहस्पतये विश्वेभ्यो देवेभ्यो ब्रह्मणे ऋषिभ्यऽऋग्यजुर्भ्यः सामभ्यः श्रद्धायै मेधायै प्रजायै धारणायै सदसस्पतयेऽनुमतये श्रियै ह्रियै सावित्र्यै सवित्रे प्रजापतये काण्डऽऋषये सोमाय काण्डऽऋषयेऽग्नये काण्डऽऋषये विश्वेभ्यो देवेभ्यः काण्डऽऋषिभ्यः सांहितीभ्यो देवताभ्यऽउपनिषद्भ्यो याज्ञिकीभ्यो देवताभ्यऽउपनिषद्भ्यो वारुणीभ्यो देवताभ्यऽउपनिषद्भ्यो हव्यवाहाय विश्वेभ्यो वरुणेभ्योऽनुमत्यै स्विष्टकृते च पृथक् स्वाहाकारेण हुत्वा व्याहृतिभिश्च तुनः परिषिञ्चति समाप्ते चैता यजुषा तर्पयतीति"।

अन्ते एता 'अग्निसोमाद्या' यजुषा पदेन सह तर्पयेत्।

यद्वा "भूर्देवांस्तर्पयामि" इत्यादि यजुषा तर्पयित्वाऽन्यादींस्तर्पयेदित्यर्थः ।

महार्णवः—

"एवमृग्वेदिनां काण्डऽऋष्यादिवर्जमास्विष्टकृतस्तेषां 'शर्तचिभ्य' इत्यादि 'महानाम्नीभ्य' इत्यन्तं प्राग्वत् । ततो वेदादिमारभ्य सन्ततमधीयीत नास्यान्तराऽनध्यायो नास्यान्तरा जनमरणे अशुचिः । आशौचं नेत्यर्थः 'नान्तरा व्याहरेन्न विरमेद्यावन्तमधीयीत ।' यावत्पर्यन्तं न विरमेन्नान्यच्च वदेदित्यर्थः । यदन्तरा विरमेत् त्रीन्प्राणानायम्य प्रणवं वा प्रविधाय यावत्कालमधीयीत । ततः सर्वनिशान्तरं सङ्ग्रामारण्यसलिलं लोप्य परिदध्यात् ।' निशान्तरं सन्ध्यानिशादींल्लोप्य विहाय समापयेदित्यर्थः । आदावन्ते च ब्राह्मणभोजनं दक्षिणां च दद्यात्" इति महार्णवोक्तं विधानम् ।

अथ कमलाकरः—

"य एतेन विधिना वेदमधीयीत सन्ततः पूतो वेदो भवति' वेदरूपो भवतीत्यर्थः । 'द्वाभ्यां पारायणाभ्यां ऋग्भिश्चाऽभोजन इहाधीतेऽनृतेभ्यः प्रमुच्यते । त्रिभिर्बहुभ्यः पतनीयपातकेभ्यः शूद्रायां रेतः सिक्त्वा गङ्गाऽप्सुवन्निमज्यश्च भवति । चतुर्भ्यः शूद्रान्नभोजनात्स्त्रीसेवनाच्च, पञ्चभिरयाज्ययाजनादग्राह्यग्रहणात्, षड्भिर्ब्राह्मणस्य लोहितकरणात्स्त्रीलोहितकरणात्पशुहननात्सुवर्णस्तेयात्पतितसंयोगाच्च, सप्तभिः प्राजापत्यस्य हीनचरणाद्यज्ञोपबन्धनाच्चाष्टभिश्चान्द्रायणस्यान्तराऽऽचरणाद्गुरुतल्पगमनाद्रजस्वलागमनाच्च, नवभिः सुरापानाद्दशभिर्पूर्वजन्मेहजन्मकृतैः सर्वैः पापैः प्रमुच्चते स्वर्गंल्लोकं गच्छति इति । अग्निष्टोमादिक्रतुभिरिष्टं भवति, पितृन्स्वर्गंल्लोकं गमयति ।

वेदाध्यायी सदैव स्यादपाप्मा सत्यवाक् शुचिः ।
यं यं कामं कामयये तं तं वेदेन साधयेत् ॥
असाध्यं नास्ति यत्किञ्चिद्ब्रह्मणो हि फलं महत् ।"

ऋग्विधाने—

आदावेव तु सावित्र्या कर्म कुर्वीत शान्तये ।
पुष्टये पशुलाभाय धनलाभाय भूतये ॥

एषा हि संहिता देवैः सर्वब्रह्ममयी निचृत् ।
उग्रेण तपसा दृष्टा विश्वामित्रेण धीमता ॥

होमांश्च जपयज्ञांश्च नित्यं कुर्वीत वै तथा ।
सर्वकामप्रसिद्ध्यर्थं परं ब्रह्मेदमुच्यते ॥

एषा वै प्रतिलोमोक्ता शत्रुपक्षविनाशिनी ।
अक्षरप्रतिलोमेयमभिचारेषु शस्यते ॥

सर्वसंहितया प्रत्यृचं होम आज्येन तिलेन वा ।
"आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।" इति ब्राह्मोक्तेः ।
"सर्वपापहरो होमस्तिलैः सर्वत्र शस्यते ॥" इति विष्णुधर्मोत्तराच्च ।

शातातपः—

कृच्छ्रो देव्ययुतं चैव वेदपारायणं तथा ।
तिलहोमसहस्रं च सममेतच्चतुष्टयम् ॥

इदं केवलम् । अन्त्ये चान्द्रमसम् ।

इति कमलाकरभट्टकृतो वेदपारायणविधिः समाप्तः ॥११॥

व्याख्या चरणव्यूहस्य आद्यखण्डस्य तेन वै ।
यथामति विरचिता महादेवप्रसादतः ॥

॥ इति चरणव्यूहे प्रथमखण्डव्याख्यासमाप्ता ॥

## द्वितीयः यजुर्वेदखण्डः

**यजुर्वेदस्य षडशीतिर्भेदाः० ॥१॥**

अथ द्वितीयखण्डो व्याख्यायते—

यजुर्वेदस्य षडशीतिर्भेदा भवन्ति। अत्र शाखाभेदो ग्राह्यः। षट् अशीति-र्भेदा इत्यर्थः। तत्र चरकानां द्वादशभेदा भवन्ति इति स्पष्टार्थः। ते के भेदाः? चरकाः आह्वरकाः कठाः प्राच्यकठाः कपिष्ठलकठाः आरायणीया वारायणीया वार्तान्तवेया श्वेताश्वतरा औपमन्यवः पाताण्डनीया मैत्रायणीयाश्चेति। मैत्रायणीयानां षड् भेदा भवन्ति। मानवा दुन्दुभा वाराहका छागलेया हारिद्र-वेया श्यामायनीयाश्चेति। इति षट् मैत्रायणीयशाखागणा इत्यर्थः। मैत्रायणी-यानां केचित्सप्तभेदा भवन्ति इति वदन्ति, श्यामा इत्यधिकं तदधिकमेव। मैत्रायणीयस्तु वाजसनेयवेदाध्यायी। मानवं कल्पसूत्रम्। तेषामध्ययनमष्टोत्तर-शतं यजुः सहस्राण्यधीत्य शाखापारो भवति। तेषामध्ययने द्विचत्वारिंशदध्यायाः। अष्टशताधिकसहस्रमन्त्रा इत्यर्थः। तान्येव द्विगुणान्यधीत्य पदपारो भवति द्विवारपठनात्पदपारायणफलं भवतीत्यर्थः। तान्येव त्रिगुणान्यधीत्य क्रमपारो भवति त्रिवारपठनात्क्रमपारायणफलं भवतीत्यर्थः। पदक्रमाध्ययनं भवतीत्यर्थः।

'षडङ्गान्यधीत्य षडङ्गविद्भवति' तानि कानि षडङ्गानि? उच्यन्ते। शिक्षादीनि षडङ्गानि भवन्ति। षडुपाङ्गान्यपि प्रतिपदादितर्कान्तानि भवन्ति। तस्मिन्यजुर्वेदे यूपलक्षणादिकूर्मलक्षणान्तान्यष्टादशपरिशिष्टसूत्राणि भवन्ति। एतेषां व्याख्यानान्यग्रे वक्ष्यामः। तत्र प्राच्योदीच्यां नैर्ऋत्यां निर्ऋत्यस्तत्र वाजसनेयानां पञ्चदशभेदा भवन्ति प्राच्य उदीच्य नैर्ऋत्येषु तिसृषु दिक्षु वाजसनेयवेदोत्पत्तिरग्रे वक्ष्यामः। इतरदेशेषु वेदशाखयोर्विभाग उच्यते। तच्च महार्णवे—

> पृथिव्या मध्यरेखा च नर्मदा परिकीर्तिता।
> दक्षिणयोत्तरयोर्भागे शाखा वेदाश्च उच्यते ॥१॥

नर्मदादक्षिणे भागे आपस्तम्ब्याश्वलायनी ।
राणायनी पिप्पला च यज्ञकन्याविभागिनः ॥२॥

माध्यन्दिनी शाङ्खायनी कौथुमी शौनकी तथा ।
नर्मदोत्तरभागे च यज्ञकन्याविभागिनः ॥३॥

तुङ्गा कृष्णा तथा गोदा सह्याद्रिशिखरावधि ।
आ आन्ध्रदेशपर्यन्त बह्वृचश्चाश्वलायनी ॥४॥

उत्तरे गुर्जरे देशे वेदो बह्वृच ईरितः ।
कौषीतकीब्राह्मणं च शाखा शाङ्खायनी स्थिता ॥५॥

आन्ध्रादि दक्षिणाग्नेयी गोदा सागरआवधि ।
यजुर्वेदस्तु तैत्तिर्यं आपस्तम्बी प्रतिष्ठिता ॥६॥

सह्याद्रिपर्वतारम्भाद्दिशां नैर्ऋत्यसागरात् ।
हिरण्यकेशी शाखा च पर्शुरामस्य सन्निधौ ॥७॥

मयूरपर्वताच्चैव यावद्गुर्जरदेशतः ।
व्याप्ता वायव्यदेशात्तु मैत्रायणी प्रतिष्ठिता ॥८॥

अङ्गवङ्गकलिङ्गश्च कानीनो गुर्जरस्तथा ।
वाजसनेयी शाखा च माध्यन्दिनी प्रतिष्ठिता ॥९॥

ऋषिणा याज्ञवल्क्येन सर्वदेशेषु विस्तृता ।
वाजसनेयवेदस्य प्रथमा काण्वसञ्ज्ञका ॥१०॥

इति ।

व्यासशिष्यो वैशम्पायनो निगदाख्यं यजुर्वेदं पठित्वा शिष्यान्चकार । तच्च भागवते—

वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन् ।
यच्चेरुर्ब्रह्महत्यांहः क्षपणं स्वगुरोर्व्रतम् ॥१॥

याज्ञवल्क्यश्च तच्छिष्य आहांहो भगवन्कियत् ।
चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम् ॥२॥

इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया ।
विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति ॥३॥

देवरातसुतः सोऽपि च्छर्दित्वा यजुषां गणम् ।
ततो गतोऽथ मुनयो ददृशुस्तान्यजुर्गणान् ॥४॥

यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाऽऽददुः ।
तैत्तिरीया इति यजुःशाखा आसन्सुपेशलाः ॥५॥

याज्ञवल्क्यस्ततो ब्रह्मन् छन्दांस्यधिगवेषयत् ।
गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥६॥

याज्ञवल्क्य उवाच—'ओं नमो भगवते आदित्याय' इत्यारभ्य 'यातयाम-यजुःकाम उपसरामि' इत्यन्तं तुष्टाव ।

सूत उवाच—

एवं स्तुतः स भगवान्वाजिरूपधरो हरिः ।
यजूंष्ययातयामानि मुनयेऽदात्प्रसादितः ॥७॥
यजुर्भिरकरोच्छाखा दश पञ्चशतैर्विभुः ।
जगृहुर्वाजिसन्यस्ता काण्वमाध्यन्दिनादयः ॥८॥

इत्यादि ग्रन्थपर्यालोचनया यजुर्वेदत्यागानन्तरं देवरातसुतेन अब्राह्मणत्व-भिया सविता सूर्यो वाजिरूपेण वाजेभ्यः केसरेभ्यः वाजेन वेगेन वा सन्यस्ता-स्त्यक्ताः शाखा वाजसनेयी संज्ञा । शाखारण्डत्वपरिहारार्थं चातुर्वेद्यत्वसङ्ख्या-संरक्षणार्थं च वाजिरूपेण सूर्येणायातयामानि यजूंषि मुनये वृत्तानि तैर्यजुर्भि-रुपरतैः स मुनिस्ताः वाजसन्यः पञ्चदशशाखा अकरोत् । तस्माच्च मुनेः सकाशात्काण्वा माध्यन्दिनादय अध्ययनं चक्रुः । ते पञ्चदश भवन्ति । अथ प्रसङ्गाद्यजुर्वेदस्य शाखाप्रणयनविचारः किञ्चिदुच्यते । तत्र यजुर्वेद एव प्रथमः ।

तथा च विष्णुपुराणे—

एक एव यजुर्वेदस्तं चतुर्धा व्यकल्पयत् । इति ।

यजुर्वेदो यज्ञोपयोगित्वरूपयोगात्सर्वोऽपि वेदो यजुर्वेद इत्युच्यते । यजुर्वेदस्य शाखाभेदं सविस्तरमाह—

यजुर्वेदतरोः शाखाः सप्तविंशन्महामुने ।
वैशम्पायननामासौ व्यासशिष्यश्चकार वै ॥१॥

शिष्येभ्यः प्रददौ ताश्च जगृहुस्तेऽप्यनुक्रमात् ।
याज्ञवल्क्यस्तु तस्याभूद्ब्रह्मरातसुतो द्विजः ॥२॥
शिष्यः परमधर्मज्ञो गुरुवृत्तिरतः सदा ।
ऋषिर्योऽद्य महामेरोः समाजे नागमिष्यति ॥३॥
तस्य वै सप्तरात्रात्तु ब्रह्महत्या भविष्यति ।
पूर्वमेवं मुनिगणैः समयो यः कृतो द्विज ॥४॥
वैशम्पायन एकस्तु तं व्यतिक्रान्तवांस्तदा ।
स्वस्त्रीयं बालकं सोऽथ पदघृष्टमघातयत् ॥५॥
शिष्यानाह स भोः शिष्या ब्रह्महत्यापहं व्रतम् ।
चरध्वं मत्कृते सर्वे न विचार्यमिदं तथा ॥६॥
अथाह याज्ञवल्क्यस्तु किमेतैर्बहुभिर्द्विजैः ।
क्लेशितैरल्पतेजोभिश्चरिष्येऽहमिदं व्रतम् ॥७॥
ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामुनिम् ।
मुच्यतां यत्त्वयाधीतं मत्तो विप्रावमानक ॥८॥
निस्तेजसो वदसि येनान्यत्त्वं ब्राह्मणपुङ्गवान् ।
तेन शिष्येण नार्थोऽस्ति ममाज्ञाभङ्गकारिणा ॥९॥
याज्ञवल्क्यस्ततः प्राह भक्त्यैतत्ते मयोदितम् ।
ममाप्यलं त्वयाधीतं यन्मया तदिदं द्विज ॥१०॥

**श्री पराशर उवाच—**

इत्युक्तो रुधिराक्तानि सरूपाणि यजूंषि सः ।
छर्दयित्वा ददौ तस्मै ययौ च स्वेच्छया मुनिः ॥११॥
यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज ।
जगृहुस्तित्तिरा भूत्वा तैत्तिर्यास्तु ततः स्मृताः ॥१२॥
ब्रह्महत्याव्रतं चीर्णं गुरुणा चोदितैस्तु तैः ।
चकुराध्वर्यवं[1] ते तु चरणान्मुनिसत्तम ॥१३॥
याज्ञवल्क्योऽपि मैत्रेय प्राणायामपरायणः ।
तुष्टाव प्रयतः सूर्यं यजूंष्यभिलषंस्ततः ॥१४॥

1. चरकाध्वर्यवः, वरकाध्वर्यवः ।

अस्यार्थः 'यजुर्वेतरोः' इत्यादिना सप्तविंशतिः। इयं च प्रधानशाखानां सङ्ख्या। ब्रह्माण्डपुराणोक्तषडशीति शाखाभेदस्तु प्रतिशाखाविवक्षया ताश्च शुक्लयजुः पञ्चदशकं सहेत्येकखाखा आपस्तम्बोक्ता इति द्रष्टव्यम्। याज्ञवल्क्येन छर्दितैर्यजुभिस्तैत्तिरीयशाखा बभूव। ते याज्ञवल्क्यव्यतिरिक्ता वैशम्पायन-शिष्या याज्ञवल्क्येन छर्दितं विप्ररूपेण ग्रहीतुमनुचितमिति तित्तिरपक्षिणो भूत्वा याज्ञवल्क्यविसृष्टानि यजूँषि जगृहुः। ततस्ताः शाखास्तैत्तिरीया बभूवुरित्यर्थः। याज्ञवल्क्यव्यतिरिक्तानां 'चरकाध्वर्यु'सञ्ज्ञां निर्वक्ति—

चरकाध्वर्यवस्ते वै चरणान्मुनिसत्तम।

'वरकाध्वर्यव' इति पाठे वरणाद्यजुषां ग्रहणात्। आध्वर्यवं चक्रुरित्यर्थः। यजूँषि वैशम्पायनेनाधीतानि।

याज्ञवल्क्यस्ततो ब्रह्मञ्छन्दांस्यधिगवेषयन्।
गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम्॥

इति भागवतोक्तेः।

**याज्ञवल्क्य उवाच—**

नमः सवित्रे द्वाराय मुक्तेरमिततेजसे।
ऋग्यजुःसामरूपाय त्रयीधामात्मने नमः॥ १५॥

इत्यादि 'पराशर उवाच' इत्यन्तां स्तुतिं कृत्वा—

इत्येवमादिभिस्तेन स्तूयमानः स वै रविः।
वाजीरूपधरः प्राह व्रियतामभिवाञ्छितम्॥१६॥

याज्ञवल्क्यस्तदा प्राह प्रणिपत्य दिवाकरम्।
यजूँषि तानि मे देहि यानि सन्ति न मे गुरौ॥१७॥

**पराशर उवाच—**

एवमुक्तो ददौ तस्मै यजूंषि भगवान् रविः।
अयातयामसञ्ज्ञानि यानि वेत्ति न तद्गुरुः॥१८॥

यजूँषि यैरधीतानि तानि विप्रैर्द्विजोत्तम।
वाजिनस्ते समाख्याताः सूर्यश्वः सोऽभवद्यतः॥१९॥

शाखाभेदास्तु तेषां वै दश पञ्च च वाजिनाम् ।
काण्वाद्यास्तु महाभागा याज्ञवल्क्यप्रवर्तिताः ॥२०॥ इति ।

तद्गुरुवैशम्पायनो यानि न वेत्ति तेषां व्यासेनानुपदिष्टत्वादिति भावः । वाजिनः समाख्याता वाजिरूपसूर्यप्रोक्तसंहिताध्यायित्वात् ।

अग्निपुराणेऽपि—

काण्वामाध्यन्दिनीसञ्ज्ञा कठी माध्यकठी तथा ।
मैत्रायणीसञ्ज्ञा च तैत्तिरीयाभिधानका ॥
वैशम्पायनिकेत्याद्याः शाखा याजुषसञ्ज्ञिता ॥

इति । आदिशब्देन एतदन्यशाखाग्रहणम् । तदुक्तं नृसिंहपराशरे —

प्रथमो याज्ञवल्क्यश्च आपस्तम्बो द्वितीयकः ।
तृतीयो मूलघटकश्चतुर्थो वाणसः स्मृतः ॥१॥

पञ्चमो सहवासश्च षष्ठः स्याद्गोत्रपण्डितः ।
रामानुजः सप्तमोक्त अष्टमश्च गयावलः ॥२॥

त्रिदण्डो नवमः प्रोक्तो नवशाखाः प्रकीर्तिताः ।
तन्मध्ये सहवासस्तु कर्मनिष्ठो द्विजाग्रणीः ॥३॥

एवं शाखादेशभेदाद्बहवस्तु द्विजातयः ।
तत्रापि कर्मनिष्ठाश्च ग्राह्या यज्ञादिकर्मसु ॥४॥
हीना द्विजातयः सर्वे त्याज्याः सर्वत्र कर्मसु ।

हीनाः द्विजातयः अभीराद्यः । परदेशे त्रिदण्डवेषधारिणः सन्यासिनः स्वग्रामे परिग्रहयुक्तास्ते त्रिदण्डिनः गोत्रपण्डितो वैश्यजातकः । मूलघटको नागबल्ली-रोपकः । निगूंला इति प्रसिद्धाः । अन्ये वाणसादि प्रसिद्धाः । केचिद् धर्मशास्त्रा-नभिज्ञा वानप्रस्थाज्जाता 'वाणसा इति वदन्ति । तद्वाक्यमारूढपतितपरम् । तदुक्तं कूर्मपुराणे वानप्रस्थाश्रमधर्मे—

यस्तु पत्न्या वनं गत्वा मैथुनं कामतश्चरेत् ।
तद्व्रतं तस्य लुप्येत प्रायश्चित्तीयते द्विजः ॥

तत्र यो जायते गर्भो न संस्पृश्यो द्विजातिभिः ।
न हि वेदेऽधिकारोऽस्य तद्वंशेऽप्येवमेव हि ॥
आरूढपतितः प्रोक्तो मुनिभिस्तत्वदर्शिभिः ॥

इति । वाजसनीयवेदोत्पत्तिरित्यर्थः । जाबालाः बौधायनाः काण्वाः माध्यन्दिनेयाः शाफेयाः तापनीयाः कपोलाः पौण्डरवत्साः आवटिकाः परमावटिकाः पाराशराः वैणेयाः वैधेयाः अद्धाः बौधेयाः इति पञ्चदशशाखा इत्यर्थः । 'प्रतिपदमनुपदम्' प्रतिपदे अनुपदं अल्पपदं कर्तव्यमित्यर्थः । 'छन्दः' छन्दोरत्नाकरादि 'भाषा' शब्द परिभाषा । 'धर्मः' धर्मशास्त्रं मिताक्षरादि । 'मीमांसा' प्रसिद्धा । (जैमिनिमर्हषिकृतमध्यायद्वादशकम्) । 'न्यायस्तर्कः' न्यायशब्देनकाणादसूत्रम् । तर्कशब्देन गौतमसूत्रम् । एति षडुपाङ्गानि । उपज्योतिषं ज्योतिःशास्त्रम् । साङ्गलक्षणं सामुद्रिकादि । यूपलक्षणं छागलक्षणं च यज्ञे प्रसिद्धम् । प्रतिज्ञासूत्रं खण्डत्रयात्मकम् । अनुवाकाध्यायः । वेदशाखापरिज्ञानार्थं चरणव्यूहसूत्रम् । श्राद्धसूत्रं नवखण्डात्मकम् । श्रौतयज्ञार्थमण्डपरचनात्मकं शुल्बसूत्रम् । पार्षदपरिशिष्टसूत्रम् । ऋग्यजुर्निर्णयात्मकं ऋग्यजुःपरिशिष्टसूत्रम् । इष्टकापूरणपरिशिष्टसूत्रम् । गोत्रप्रवरनिर्णयार्थः प्रवराध्यायः । उक्थ्यशास्त्रपरिशिष्टम् । ऋतुसङ्ख्या । निगम यज्ञपार्श्वं हौत्रक प्रसवोत्थान कूर्मलक्षणपरिशिष्टपञ्चकं यज्ञेषु प्रयोजनं प्रसिद्धम् । एतानि परिशिष्टान्यष्टादशसङ्ख्यकानि कात्यायनमर्हषिप्रणीतानि ।

द्वे सहस्रे शते न्यूने मन्त्रे वाजसनेयके ।
ऋग्गणः परिसङ्ख्यातमेतत्सर्वं सशुक्रियम् ॥

वाजसनेयके वेदे नवशताधिकसहस्रमन्त्रा इत्यर्थः । एतत्सकलं सशुक्रियमन्त्रं 'ऋचं वाचम्' इति षट्त्रिंशदध्यायोक्तचतुर्विंशदृचात्मकसहितं मध्याह्ने शुक्लवर्णेन सूर्येण दत्तः सशुक्रयज्ञः परिसङ्ख्यात इत्यर्थः । वेदोपक्रमणे चतुर्दशीयुक्तपौर्णिमाग्रहणाच्छुक्लयजुः । प्रतिपदायुक्तपौर्णिमाग्रहणात्कृष्णयजुरिति वा । ऋक्सङ्ख्या पञ्चविंशत्युत्तरैकोनविंशतिः (१९२५) । खिलमन्त्राः 'अग्निश्च' इति षड्विंशत्यध्यायोक्ताः । यजुःसङ्ख्या अष्टाविंशत्युत्तराष्टशतान्यष्टौ सहस्राणि । 'ब्राह्मणं च चतुर्गुणम्' वेदचतुर्गुणं शतपथब्राह्मणमित्यर्थः ।

यजुर्वेद तरोरासन् शाखा एकोत्तरं शतम् ।
तत्रापि च शिवाः शाखा दश पञ्च च वाजिनाम् ॥

तत्रापि मुख्या विज्ञेया शाखा या कण्वसञ्ज्ञका । इति ग्रन्थान्तरे ।

तैत्तिरीयकानां द्विभेदा भवन्ति—औखेया खाण्डिकेयाश्चेति । खाण्डिकेयानां पञ्चभेदा भवन्ति—कालेता शाट्यायनी हिरण्यकेशी भारद्वाजी आपस्तम्बीति । तेषामध्ययनपरिमाणम्—

काण्डास्तु सप्त विज्ञेयाः प्रश्नाश्चाधिक्यकाश्चतुः ।
चत्वारिंशत्तु विज्ञेया अनुवाकाः शतानि षट् ॥१॥

एकपञ्चाशदधिकाः सङ्ख्याः पञ्चाशदुच्यते ।
द्विसहस्रञ्चैकशतमष्टानवति चाधिका ॥२॥

लक्षैकं तु द्विनवति सहस्राणि प्रकीर्तितम् ।
पदानि नवतिश्चैव तथैवाक्षरमुच्यते ॥३॥

लक्षद्वयं त्रिपञ्चाशत्सहस्राणि शताष्टकम् ।
अष्टषष्ट्यधिकं चैव यजुर्वेदप्रमाणकम् ॥४॥

काण्डाः ७ । प्रश्नाः ४४ । अनुवाकाः ६५१ । सङ्ख्याः २१९८ । पदानि १९२०९० । अक्षराणि २५३८६८ ।

शाखावाक्यान्ययुतानि सहस्राणि नवानि च ।
चतुःशतान्यशीतिश्च अष्टौ वाक्यानि गण्यते ॥

इति ब्राह्मणे अष्टौ वाक्यसङ्ख्या १९४८० । इति तैत्तिरीयनिगदवेदाख्य-सङ्ख्योक्ता इत्यर्थः तत्र कठानां तूपगायतुचतुश्चत्वारिंशदुपग्रन्थाः ।

मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते ।
यजुर्वेदः स विज्ञेय अन्ये शाखान्तराः स्मृताः ॥

चतुश्चत्वारिंशदुपग्रन्थाः अध्यायाः समीपे उक्ताश्चत्वारिंशत् । मन्त्रश्च ब्राह्मणं च मन्त्रब्राह्मणे तयोर्मन्त्रब्राह्मणयोः तयोश्च वेद इति सञ्ज्ञा । तदुक्तं-'मन्त्रब्राह्मणयोर्वेद इति नामधेयम्' इत्यृक्शाखीयप्रातिशाख्यभाष्यकारेणोव्वटेन आपस्तम्बसामान्यसूत्रभाष्यकारेण कपर्दिना धूर्तस्वामिना च । तथा च सति

मन्त्रो नाम संहितामन्त्रास्तादृङ्मन्त्ररूपसंहितायास्तन्मध्ये एव तदग्रे ब्राह्मणत्वेन पठनमित्युभयथाऽपि संहितात्वेन पदत्वेन क्रमत्वेन च पठनं त्रिगुणं पठनमिति 'स मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते' इत्यर्थः। एतादृशपठनं शाखाया अध्ययनं स यजुर्वेदस्तच्च तैत्तिरीयशाखायामेवास्ति। तथा हि सम्पश्यामि— "प्रजाऽअहमिह प्रजासो मानवीः" इति संहितामन्त्रः। एतस्यैव ब्राह्मणं संहितायामेव तदग्रे एव सम्पश्यामि—"प्रजाऽअहमित्याह यावन्त एवेति" ब्राह्मणमित्युभयोरपि संहितात्वेन क्रमत्वेन पठनं त्रिगुणितं पठनं भवति। एतादृशमुदाहरणान्तरमाह—"इमामगृभ्णन्नशनामृतस्य पूर्वऽआयुषिविदथेषु" इति संहितामन्त्रः। एतस्यैव ब्राह्मणं संहितायामेव तदग्रे एव संहितारूपेण वर्तते। तत्कथम्? इत्यपेक्षायामाह—"इमामगृभ्णन्नशनामृतस्येत्यश्वाभिधानीमादत्त" इति ब्राह्मणम्। अनयोरपि त्रिगुणत्वेन पठनम्। "उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रय" इति त्रिगुणत्वेन पठनं भवति। एते त्रिगुणाः कस्यापि शाखायां न भवन्ति किन्तु शाखा सङ्ग्रन्थत्वात्। एवमन्यान्यपि बहूनि वाक्यानि सन्ति तानि विस्तरभयान्नोक्तानि। अतः कारणात् अन्ये शाखान्तराः स्मृताः। तेषामध्ययनं प्रवचनीयाश्चेति' एतेषां शुक्लकृष्णयजुषां पठनं प्रवचनीयाः प्रतिवचनत्वेन आर्षीयपाठत्वेन च समाप्तमित्यर्थः।

अन्यान्यमपि पुराणवाक्यानि सङ्गृहीतानि—

अग्निमीले नमस्तुभ्यमिषे त्वोर्ज्जे लसत्तनुः।<br>
अग्नऽआयाहिवीतये शन्नोदेवी स्वरूपवान्॥१॥

इमे त्वोर्ज्जे यजुर्वेदशब्दः पुरुष एव च।<br>
नभश्च पूर्णिमासूर्यं उदयव्यापिनी तथा॥२॥

सङ्गृह्यमाणश्च यो वेदं प्रतिवर्षे व्रतं चरेत्।<br>
यातयामनिवृत्त्यर्थं छन्दस्य च विशेषतः॥३॥

तस्योष्णिक्छन्दलोमेषु गायत्री च त्वचा स्मृता।<br>
मांसेषु त्रिष्टुभं विद्यादनुष्टुब्रुधिरः स्मृतः॥४॥

अस्थीषु जगती चैव मज्जासु पङ्क्तिरेव च।<br>
प्राणेषु बृहती छन्दो यजुर्वेदस्य लक्षणम्॥५॥

एतदर्थे ऐतरेयश्रुतिः :-"शुक्लकृष्णकनीनिकेति स यदि ह वाऽअपि मृषा वदति यऽएवमेतं छन्दसां छन्दस्त्वं वेद" इत्यन्तम् ।

पुण्याहवाचने मन्त्रान् प्रोक्षणे कङ्कणस्य च ।
सभायां ब्रह्मयज्ञे च इषे त्वोर्जे यजुः पठेत् ॥१॥

शाङ्ख्यायनं ब्रह्मयज्ञे इषे त्वोर्जे यजु स्मरेत् ।
श्रौते स्मार्ते च पूर्ते च सर्वकर्मसु योजितः ॥२॥

ऋग्यजुः सामाथर्वांश्च सभायां कुण्डमण्डपे ।
ब्रह्मयज्ञे प्रतिसरे पठेद्वै स्वस्तिवाचने ॥३॥

अन्यत्र समुदायश्च प्रायश्चित्ते सभासु ते ।
यजुर्वेदोपनिषदे मन्त्राः शाकलसञ्ज्ञकाः ॥४॥

उपदिष्टाः शौनकेन आत्मशिष्याय शाकले ।
तेषां शाकलमन्त्राणां यजुःसञ्ज्ञा समीरिता ॥५॥

यस्य वेदे शाकलमन्त्राः तस्य यजुःसञ्ज्ञा इत्यर्थः ॥१॥

व्याख्या चरणव्यूहस्य यजुःखण्डस्य तेन वै ।
विस्तारिता यथाबुद्धि महादेवप्रसादतः ॥

*** इति चरणव्यूहे द्वितीयखण्डव्याख्या समाप्ता ***

# तृतीयः सामवेदखण्डः

**सामवेदस्य किल सहस्रभेदाः० ॥१॥**

अथ तृतीयखण्डो व्याख्यायते—

सामवेदस्येति । किलेति प्रसिद्धौ सहस्रभेदा आसीत् । सहस्रभेदमध्ये शक्रेण वज्रेणाभिहताः प्रणष्टाः ।

अनध्यायेष्वधीयाना म्रीयन्ते विद्युताः खलु ।

इति ।

शेषान् शाखापाठकान्व्याख्यास्यामः । आसुरायणीया वासुरायणीया वार्तान्तरेयाः प्राञ्जलऋग्वैनविधाः प्राचीनयोग्याः राणायनीयाश्चेति । तत्र राणायनीयानां नव भेदा भवन्ति । राणायनीयाः शाट्यायनीयाः सात्यमुद्गलाः खल्वलाः महाखल्वलाः लाङ्गलाः कौथुमाः गौतमाः जैमिनीयाश्चेति । तेषामध्ययनम् । अष्टौ सामसहस्राणि सामानि च चतुर्दशान्यष्टौ शतानि दशभिर्दशसप्तसु वालखिल्यः सुपर्णः प्रेक्ष्यमेतत्सामगणं स्मृतम् । अथ प्रकारान्तरेणाह—तत्र राणायनीयानां सप्त भेदा भवन्ति । राणायनीयाः सात्यमुग्राः कालेयाः महाकालेयाः लाङ्गलायनाः शार्दूलाः कौथुमाश्चेति । तत्र कौथुमानां षड्भेदा भवन्ति । कौथुमाः आसुरायणाः वातायनाः प्राञ्जलिद्वैनंमृतः प्राचीनयोग्या नैगमीया इति । तेषां कौथुमादीनामध्ययनम् ।

अशीतिशतमाग्नेयं पावमानं चतुःशतम् ।
ऐन्द्रं तु षड्विंशतिर्यानि गायन्ति सामगाः ॥

तानि सूक्तान्यधीत्य चन्डादुत्कृष्टात्ते चण्डतरा अत्युत्कृष्टा भवन्ति । शिष्टानि व्यतिरिक्तानि अधीत्य पठित्वा शिष्टाऽऽविंशतिको भवति । शिष्टान् प्रामाणिकान् आविंशतिशिष्टेषु वा शिष्टभागाः प्रवेशयोग्याः शिष्टा अष्टाविंशतिगणानां पूरकाः सर्वश्रेष्ठो भवतीत्यर्थः । तत्र सूक्तेषु केचित् मन्त्रतन्त्रा इति मन्त्रश्चतुर्धा विधीयन्ते । तदाह्याचार्यः—ऋक्तन्त्रं सामतन्त्रं सञ्ज्ञालक्षणं धातुलक्षणमिति ।

इदानीं सामसङ्ख्यामाह—

अष्टौ सामसहस्राणि सामानि च चतुर्दश ।
अष्टौ शतानि नवतिदशतिर्वालखिल्यकम् ।।

सरहस्यं ससुपर्णप्रेक्ष्यं तत्सामदर्पणम् ।
सारण्यकानि सौर्याण्येतत्सामगणं स्मृतम् ।।

अशीतिशतमाग्नेयम् १८० । पावमानम् १०४ । ऐन्द्रन्तु २६ । शिष्टाः २८ गणानां पूरकाः । 'अष्टौ सामसहस्राणि' इत्यस्यार्थोऽङ्कतो ज्ञातव्यः ८८१४ । अन्यशाखासङ्ख्यामाह—'नवतीति' । सुपर्णप्रेक्षः कश्चिच्छाखाभेदः तेन सह वर्तमानः ससुपर्णप्रेक्षः सुपर्णप्रेक्षेण सहितो वालखिल्यः शाखाभेदः । नवतिः नवतिसङ्ख्याकः दशतयो यस्मिन् स नवतिदशतिः । दशतिरिति । दशसङ्ख्या सञ्ज्ञा दशगुणा नवतिरित्यर्थः । अङ्कतोऽपि ९०० । 'सारण्यकानि' आरण्यकेनोपनिषद्भागेन सह वर्तमानानि सौर्याणि सूर्यदेवत्यानि सूक्तानि । तत्र वालखिल्यशाखायामेव आरण्यकं सूर्यसूक्तं सुपर्णप्रेक्षवालखिल्यानि मिलित्वा नवशतानीत्यर्थः । निगमयन्ति—एतत्पूर्वोक्तसामसमूहः स्मृतं कथितम् । गणशब्दस्य वलीयस्त्व छान्दसम् । आसां षोडशशाखानां मध्ये तिस्रः शाखा विद्यन्ते । ताश्च गुर्जरदेशे कौथुमी प्रसिद्धा । कार्णाटके जैमिनी प्रसिद्धा । महाराष्ट्रदेशे राणायनी प्रसिद्धेति । आसां शाखानामध्यापकाचार्यस्त्रयोदश सङ्ख्याकाः । ते यथा —

राणायनी सात्यमुग्री दुर्वासा अथ भागुरिः ।
भारुण्डो गोर्गुजवीर्भगवानौपमन्यवः ।।

दारालो गार्ग्यसावर्णी वार्षगण्यश्च ते दश ।
कुथुमिः शालिहोत्रश्च जैमिनिश्च त्रयोदश ।।

इत्येते सामगाचार्याः स्वस्तिं कुर्वन्ति तर्पिताः ।। इति ।

अन्येऽपि भागवतद्वादशस्कन्धीयसप्ताध्यायपञ्चसप्ततितपद्यारभ्य अध्यायसमाप्तिपर्यन्तोक्ताः सामवेदप्रवर्तकास्ते यथा—

जैमिनेः सामगस्यासीत्सुमन्तुस्तनयो मुनेः ।
सुमन्वांस्तत्सुतस्ताभ्यामेकैकां प्राह संहिताम् ।।१।।

सुकर्माऽपि च तच्छिष्यः सामवेदतरोर्महान् ।
सहस्रं संहिताभेदं चक्रे साम्नां ततो द्विजः ॥२॥

हिरण्यनाभः कौसल्यः पौष्यञ्जिश्च सुकर्मणः ।
शिष्यौ जगृहतुश्चान्य आवन्त्यो ब्रह्मवित्तमः ॥३॥

उदीच्याः सामगाः शिष्या आसन्पञ्चशतानि वै ।
पौष्यञ्ज्यावन्त्ययोश्चापि तांश्चोदीच्यान्प्रचक्षते ॥४॥

लौगाक्षिर्लाङ्गलिः कुल्यः कुशीदः कुक्षिरेव च ।
पौष्यञ्जिशिष्या जगृहुः संहितास्ते शतं शतम् ॥५॥

कृतो हिरण्यनाभस्य चतुर्विंशतिसंहिताः ।
शिष्य ऊचे स्वशिष्येभ्यः शेषा आवन्त्य आत्मवान् ॥६॥

अस्यार्थः सामगस्य जैमिनेः पुत्रः सुमन्तुर्नाम तस्य सुमन्तोः सुतः सुमन्वान्नाम ताभ्यां सुमन्तुसुमन्वभ्यां पुत्रपौत्राभ्यां क्रमेणैकैकां प्राह । सुकर्मापि तस्य जैमिनेः शिष्यो महानतिप्रज्ञावान् सामवेदाख्यतरोः साम्नां सहस्रसंहितारूपं भेदं चक्रे । कोसलपुत्रो हिरण्यनाभश्च पौष्यञ्जिश्च सुकर्मणः शिष्यौ सामशाखां जगृहतुः । अन्ये आवन्त्य उदीच्यश्च सामशाखां जगृहतुः । पौष्यञ्ज्यावन्त्ययोश्चापि सामगाः पञ्चशतानि शिष्या आसन् । तेषां समुदितानां मतानां नामानीति पौष्यञ्जिशिष्या लौगाक्ष्यादयो नाम्ना शतं शतं संहितां जगृहुः । हिरण्यनाभस्य शिष्यो नाम्ना कृतश्चतुर्विंशतिसंहितां स्वशिष्येभ्य ऊचे शेषा अन्या संहिता आत्मज्ञानवानावन्त्यः स्वशिष्येभ्य ऊचे इत्यर्थः ॥१॥

व्याख्या चरणव्यूहस्य सामखण्डस्य तेन वै ।
विस्तारिता यथाबुद्धि महादेवप्रसादतः ॥

**॥ इति चरणव्यूहे तृतीयखण्डव्याख्या समाप्ता ॥**

# चतुर्थः अथर्ववेदखण्डः

**अथर्ववेदस्य नव भेदाः० ॥१॥**

अथ चतुर्थखण्डो व्याख्यायते—

अथर्ववेदस्येति। अथर्ववेदस्य नव भेदा भवन्ति नवशाखा भवन्तीत्यर्थः। तानाह पैप्पला दान्ता प्रदान्ता औता जाबाला शौनका ब्रह्मपलाशा कुनखी-वेददर्शी चारणविद्याश्चेति। तेषामध्ययनं द्वादशैव सहस्राणि मन्त्राणाम्। कीदृशानि पञ्चकल्पानि भवन्ति। अत्र बहुवचनात्ते बहवः। यत्र एकवचनं स एकः। तेषामध्ययनं शाखया उच्यते। द्वादशसहस्राणि मन्त्राणां कीदृशानि? एकस्मिन्कल्पे कल्पे पञ्चशतानि मन्त्राणाम्। कल्पान्याह—नक्षत्रकल्पः विधानकल्पः विधिविधानकल्पः संहिताकल्पः शान्तिकल्पः इति पञ्चकल्पाः तत्र वेदानां चत्वार उपवेदा भवन्ति। यथा—ऋग्वेदस्योपवेद आयुर्वेदः चिकित्सा-शास्त्रम्। यजुर्वेदस्योपवेदो धनुर्वेदो युद्धशास्त्रम्। सामवेदस्योपवेदो गान्धर्व वेदस्सङ्गीतशास्त्रम्। अथर्ववेदस्यार्थशास्त्रं नीतिशास्त्रं शस्त्रशास्त्रं विश्वकर्मादि-प्रणीतशिल्पशास्त्रम्। इति भगवान्वेदव्यासः स्कन्दः कुमारो वाऽऽह। य इमे चत्वारो वेदा उक्तास्तेषां मध्ये एकैकस्य कीदृशं रूपं आकारः तत्तद्वर्णं सितासितादि विधः प्रकारश्चोच्यते।

तत्रादौ ऋग्वेदस्वरूपमाह—

ऋग्वेदः पद्मपत्राक्षः—पद्मपत्रं कमलदलं तद्वदक्षिणी नेत्रे यस्य सः। सुविभक्तग्रीवः—सुविभक्ता रेखात्रयाङ्किता ग्रीवा यस्य सः। कुञ्चितकेशश्मश्रुः-कुञ्चितावलीमन्तः केशाः शिरसिजाः श्मश्रूणि मुखरोमाणि यस्य सः। श्वेतवर्णः-वर्णेन तु ककुब्वर्णो न, श्वेतवर्णः श्वेतो वर्णो यस्य सः। कीर्तितं प्रमाणं तावत्ति-ष्ठन्वितस्तीः पञ्च, तावत्साकल्येन पञ्च वितस्तीर्भवन्ति। ह्येतत्प्रमाणमृग्वेदस्य कीर्तितमुक्तम्। वितस्ति शब्दो द्वादशाङ्गुलात्मकः। सार्द्धहस्तद्वयप्रमाणमित्यर्थः। यजुर्वेदस्वरूपमाह—

यजुर्वेदः पिङ्गाक्षः—पिङ्गे पीते अक्षिणी यस्य सः। कृशमध्यस्थूलगलकपोलः—कृशं मध्ये कटि प्रदेशे यस्य सः। स्थूलौ गलकपोलौ यस्य सः। ताम्रवर्णः—ताम्रवदाचरितो रक्तो वर्णो यस्य सः। यद्वा कृष्णः वर्णो यस्य स.। दीर्घत्वेनोच्चत्वेन षट्प्रादेशमात्रप्रमाणं यस्य सः। 'प्रादेशस्तु प्रदेशिन्या' इत्यभिधानोक्तेः। अङ्गुष्ठप्रदेशिन्योर्विहितत्वात्प्रमाणप्रादेशो दशाङ्गुलः। तादृशाः षट्प्रादेशाः प्रमाणं षष्ट्यङ्गुलं सार्द्धद्वयहस्तमित्यर्थः। सामवेदस्य रूपमाह—

सामवेदो नित्यं स्रग्वी—स्रजो माला यस्य सन्तीति स्रग्वी। "अस्मायामेधास्रजो विनिः" (अष्टा० ५.२.१२१) इति सूत्राद्विनि प्रत्ययः। नित्यं पुष्पमालाधारी। सुप्रयतः यमनियमवान्। शुचिवासाः—शुचिः शुद्धं वासो वस्त्रं यस्य स शुद्धवस्त्रधारी। शमी–शान्तिरस्यास्तीति शमी शान्तमनाः। दान्तो–नियतबाह्येन्द्रियः। बृहन्महच्छरीरं यस्य सः। शमीतरोर्दण्डो यस्य सः शमीदण्डी। कातरेऽल्पेऽक्षिणी द्वे नेत्रे यस्य सः। काञ्चननयनो वा। आदित्यस्य भानोर्वर्ण इव वर्णो यस्य सः। श्वेतवर्णो वा नवारत्निप्रमाणं यस्य सः। सार्द्धचतुष्टयहस्तदीर्घ इत्यर्थः। अथर्ववेदस्वरूपमाह—

तीक्ष्णः उग्रः। प्रचण्डः क्रोधी। कामरूपी–कामेन रूपाणि यस्य सः स्वेच्छारूपधारी। विश्वस्य आत्मा जीवनम्। विश्वस्य कर्ता स्रष्टा च उपनिषद्बाहुल्यात्। क्षुद्रकर्मा–क्षुद्राणि कर्माणि यस्य सः। अभिचारकृत्याप्रयोजकमन्त्रबाहुल्यात्। स्वशाखाध्यायी–अथर्वणि विशेषः प्राज्ञश्च। महानीलोत्पलवर्णो-वर्णेन श्यामकमल इव वर्णो यस्य सः श्यामसुन्दरः। दश अरत्नयः अकनिष्ठकहस्तः प्रमाणं यस्य पञ्चहस्त प्रमाण इत्यर्थः। अथर्ववेदस्य रूपान्तरे पाठान्तरश्च—"श्वेतसाध्यवशी च सजलमूर्धनि गालवः स्वदारजुष्टः परस्त्रियाः स्तन्यपश्चेति।"

अथ वेदानां गोत्रदेवताछन्दांस्याह—ऋग्वेदस्यात्रेयसगोत्रम्। आत्रेयाः सगोत्राः समानगोत्रा यस्य तत्। अत्रिगोत्रऋग्वेद इत्यर्थः। सोमदैवत्यं यस्य तत्। गायत्रो छन्दो यस्य तत्। एवमग्रेऽपि व्याख्यातव्यम्। अथ यजुर्वेदस्य काश्यपगोत्र इन्द्रदैवत्यं त्रिष्टुप्छन्दः। अथ सामवेदस्य भारद्वाजगोत्रं रुद्रदैवत्यं जगतीछन्दः। अथर्ववेदस्य वैतानसगोत्रं ब्रह्मदैवत्यं अनुष्टुप्छन्दः ॥१॥

*** इति चरणव्यूहे चतुर्थखण्डव्याख्या समाप्ता ***

## पञ्चमः फलश्रुतिखण्डः

**य इदं वेदानां नामरूपगोत्रं० ॥१॥**

अथ पञ्चमखण्डो व्याख्याते—

अथ चतुर्वेदस्य फलस्तुतिमाह—य इदमिति। यः पुमानिदं वेदानां नाम रूपं गोत्रं प्रमाणं छन्दो दैवत्यं वर्णं वर्णयति। नामादीनां द्वन्द्वैकवद्भावः। नाम ऋग्वेदादि १, रूपं पद्मपत्राक्षादि २, गोत्रमात्रेयादि ३, प्रमाणं पञ्चवितस्त्यादि ४, छन्दो गायत्र्यादि ५, दैवत्यं सोमादि ६, वर्णं श्वेतादि च ७, इत्यादि यो जानाति स अविद्यो विद्याहीनः सन्विद्यां लभते प्राप्नोति जातिस्मरोऽथ जायते। अथ जन्मान्तरे उत्तमजातिर्जायते पूर्वजातिं स्मरति। जन्म जन्म प्रतिजन्म वेदपारगः वेदपाठी भवति। अव्रती व्रती भवति व्रतहीनोऽपि व्रतवान्भवति। ब्रह्मचर्यहीनो ब्रह्मचर्यफलं प्राप्नोति। 'शौनकाचार्याय नमः' इति पदावृत्तिर्ग्रन्थसमाप्त्यर्थः। श्रवणपठनफलमाह—य इदमिति। यः पुमान् इदं चरणव्यूहं गर्भिणीं स्त्रियं श्रावयति सा स्त्री पुमांसं पुरुषलक्षणोपेतं पुत्रं जनयेत्। यः श्राद्धकाले द्विजः इदं चरणव्यूहं पठेत् तच्छ्राद्धं पितॄन्तर्पयतीत्यर्थः। य इदं प्रत्यहं पठेत्स पङ्क्तिपावनो भवति। यस्यां पङ्क्तौ द्विज आस्ते तां सर्वां पङ्क्तिं पावयतीत्यर्थः। स च पुरुषः पुत्रान्प्रभृतीन्पुत्रादिकान्सप्तसप्त च पुनः सप्तवारानाद्यादीन्पित्रादींश्च आत्मानं चैव पञ्चदशपुरुषान्तारयति। य इदं पठेत्पर्वसु अष्टमीभूतदर्शपौर्णमासी सङ्क्रान्तिषु च पठति स धूतपाप्मा दूरीकृतः पापं येन सः। स स्वर्गवासी पवित्रः सन् ब्रह्मभावाय गच्छति। कर्मणि चेति चतुर्थी। ब्रह्मभावं प्राप्नोतीत्यर्थः।

यो नामानि पुरा वेदा अमृतत्वं च गच्छति।
लोकातीतं महाशान्तममृतत्वं च गच्छति॥

ॐ नमः इत्याह भगवान्पाराशर्यः। ॐ नमः परमर्षिभ्यो नमः।

तं वेदशास्त्रपरिनिश्चितशुद्धबुद्धिं
चर्माम्बरं सुरमुनीन्द्रनुतं कवीन्द्रम् ।
कृष्णद्विपं कनकपिङ्गजटाकलापं
व्यासं नमामि शिरसा तिलकं मुनीनाम् ॥

* इति चरणव्यूहपञ्चमखण्डव्याख्या समाप्ता *

त्रिदशाङ्कधरा (१६१३) मिते गतेऽब्दे मधुमासे दशमीतिथौ सुधांशौ ।
महिदासबुधः परोपकृत्यै चरणव्यूहमिदं व्यकारि काश्याम् ॥१॥

विद्वद्भिः प्रार्थितेनेयम्महिदासद्विजन्मना ।
चरणव्यूहविवृतिर्विधिना तु मया कृता ॥२॥

॥ समाप्तोऽयं ग्रन्थः ॥

**OTHER IMPORTANT**

1. The Viśvāmitras and the Vasi... Historical Study (Vedic & Post-Vedic)
   —By Dr. U. C. Sharma Rs. 60/-

2. ऋग्वेद-सर्वानुक्रमणी of कात्यायन
   —Ed. by Dr. U. C. Sharma Rs. 20/-

3. पवनदूतम् of धोयी (With Introduction, Hindi Translation & Notes)
   —Ed. by Dr. U.C. Sharma & G. C.Sharma Rs. 10/-

4. The Dāśarājña War
   —By Dr. U. C. Sharma Rs. 5/-

5. घटकर्परकाव्यम् (With Introduction, Sanskrit Commentary & Hindi Translation)
   —Ed. by Dr. U.C. Sharma & G.C. Sharma Rs. 5/-

6. नेपाल में पंचायती लोकतन्त्र
   —By Dr Ramji Dwivedi Rs. 15/-

*Can be had of—*

VIVEKA PUBLICATIONS
Samad Road, Aligarh.